के ॥ ४५२ ॥ ब्राह्मणोबहुविद्यावान्धनपुत्रादिसंयुतः ॥ द्वादशेषोडशेवर्षेकष्टहानिःसुदानकैः ॥ ४५३ ॥ परमायुर्वर्षाणि ७०
॥ १०७ अथसंगावलीनयोगः ॥ संगावलीनेयोजातःसपूर्वंचोलदेशके ॥ वैश्यश्चातिदयालुश्चसर्वसौभाग्यसंयुतः ॥ ४५४ ॥ एकदातिथि
र्यातस्तस्मैभिक्षांनदत्तवान् ॥ तेनपापेनमृत्वासौभुक्त्वादुःखंयमालये ॥ ४५५ ॥ आगत्यचधरापृष्ठेनिर्धनश्चबभूवह ॥ सकुटुम्बी
भवादुःखीसुखीस्याद्देवपूजनात् ॥ ४५६ ॥ ३ । ५ । ११ । २० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ६५ ॥ १०८ अथशौरीयोगः ॥
शौरीयोगेचयोजातःसपूर्वंबाहुजोह्यभूत् ॥ कृत्वाराज्यंसधर्मेणह्येकदापापमाचरत् ॥ ४५७ ॥ सगोत्रारमणंकृत्वालब्ध्वानिन्दांचलोक
के ॥ मृत्वायातश्चदूतैःसयमलोकेद्विजोत्तम ॥ ४५८ ॥तत्रभुक्त्वापापफलंचागतोधरणीतले॥सर्वदाह्युपदंशेनरोगेणातिप्रपीडितः ॥४५९॥
द्विजकन्याविवाहेनभवेच्छान्तिर्नचाऽन्यथा ॥ ४६०॥ १ । २५ । ३० वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ८० ॥ १०९ अथसोभनीयोगः॥
सोभनीयोगेयोजातोधीवरःपूर्वजन्मनि ॥ मत्स्यान्हत्वाबहूंश्चापिमृत्वागत्वायमालयम् ॥ ४६१ ॥ तत्रभुक्त्वापापफलंचागतोधरणी
तले ॥ तेनावशिष्टपापेनजातःपुत्रोविनश्यति ॥ ४६२ ॥ रामनामानिलक्षंचपादयुक्तंद्विजोत्तम ॥ लेखयित्वाचमत्स्येभ्यःपिष्टयुक्तानि
दापयेत् ॥ ४६३ ॥ तदास्यात्संततेःसौख्यंचान्यथानद्विजोत्तम ॥ ४६४ ॥ ३ । ७ । १० । १५ । वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि ७५ ॥
११० अथशरणागतयोगः ॥ पुरुषोत्तमपुरेरम्येन्यवत्परिवारयुक् ॥ धनमैश्वर्य्यमतुलंदेवलोनामविश्रुतः ॥ पादजःसत्यवक्ताचसभामा
नीविचक्षणः ॥ ४६५ ॥ एकस्मिन्समयेविप्रद्रव्यलोभेनचेतसा ॥ आत्मार्थेचनृपस्याग्रेमिथ्याऽब्रुवत्तदानघ ॥ ४६६ ॥ तत्पापाच्च
[illegible] ॥ मर्कटोगोमतीतीरेपुनर्भूत्वाचमानुषः ॥ ४६७ ॥ अत्रजन्मन्यभूद्वासौधनधान्यसमन्वितः ॥ पुत्रार्थं

चिंतयामासश्रमणंयत्रतत्रच ॥ ४६८ ॥ १ । ४ । ७ । ११ । १७ । २० । २८ । ३० । ३४ । ३७ । ३९ । ४१ । ४९ । ४९ वर्षेषु
कष्टम् ॥ परमायुर्वर्षाणि ६७ ॥ १११ अथसामयोगः ॥ आसीज्जन्मांतरेचैवब्राह्मणःशास्त्रकोविदः ॥ देशेहिकीकटेचैवगयायादक्षिणे
तटे ॥ ४६९ ॥ हरिनारायणोनामपत्नीपुत्रसमन्वितः ॥ वैष्णवोदानशीलश्चपितृभक्तिपरायणः ॥ ४७० ॥ सुधीश्चसर्वशास्त्रेषुकाव्या
लंकारबोधकः ॥ रक्षको निजवर्गाणांब्राह्मणानांविशेषतः ॥ ४७१ ॥ एवंनिवसतस्तत्रबहुवर्षगतागतेः ॥ आयुष्कस्तुसमाप्तित्वात्समृतः
कालचोदितः ॥ ४४२ देवलोकेऽभवत्प्राप्तोयत्रदेवोमहेश्वरः ॥ स्वर्गलोकात्परिभ्रष्टश्चागतोधरणीतले ॥ ४७३ । १ । ३ । ५ । ७ ।
११ । १५ । १८ । २० । २५ । ३० । ३२ । ३६ । ३९ । ४५ । ५० । ५७ वर्षेषुकष्टम् ॥ परमायुर्वर्षाणि १०४ ॥ योगाध्यायाश्चह्येतेवैकथि
ताःपूर्वजन्मकाः ॥ बोद्धव्यंपूर्ववद्वाक्यैःशृणुशुक्रह्यनन्यधीः ॥ ४७४ ॥ इति श्रीभृगुसंहितायांभृगुशुक्रसंवादेयोगावलिःसमाप्ता ॥

इदं पुस्तकं हर्यन्देशान्तर्गतमाजराग्रामनिवासिश्रीयुतपण्डितश्रीनंदलालशास्त्रिभिः श्रीक्षेमराजश्रीकृष्णदासश्रेष्ठिनामनुज्ञया न्यूनाधिकविषयपरिपूरणपुरःसरं सम्यक्परिशोधितम् ।

इदं पुस्तकं मुम्बय्यां क्षेमराज–श्रीकृष्णदासश्रेष्ठिना स्वकीये
“श्रीवेङ्कटेश्वर” स्टीम्–यन्त्रालयेऽङ्कयित्वा प्रकाशितम् ।
संवत् १९६७, शके १८॰॰.

